॥ श्रीवरदराजाचार्यविरचिता ॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लघुसिद्धान्तकौमुदी

तिङन्ते

## भावकर्मप्रक्रिया कर्मकर्तृप्रक्रिया लकारार्थप्रक्रिया च

लघुकौमुदी के ३५ संस्करणों पर आधारित रंगीन संस्करण

इस विषय के शोधपूर्ण सरलव्याख्यान पद्धति पर आधारित वीडियो हमारे चैनल पर उपलब्ध हैं।

**परामर्शकौ**

प्रो. ब्रजभूषणओझा

प्रो. नीलाभतिवारी

इन स्लाइड्स के माध्यम से पढ़ने के लिए अथवा इनकी व्याख्या देखने के लिए हमारे चैनल का अनुसरण करें।



YouTube संस्कृतसारः @sanskrit sar

**प्रस्तोता**


डॉ. श्रीओमशर्मा (व्याकरणविद्याशाखा)

केन्द्रीयसंस्कृतविश्वविद्यालयः,

श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः (उत्तराखण्डः)

# निवेदनम्

यह पठन-पाठनसामग्री ‘संस्कृतव्याकरण’ में शीघ्र प्रवेशेच्छुक-छात्राध्यापकों के हेतु ‘संस्कृतसारः’ इस समाजसेवी संस्था द्वारा संस्कृतभाषा की सेवार्थ प्रस्तुत की जा रही है। अतः आपसे निवेदन है कि इन ‘लघुसिद्धान्तकौमुदी’ स्लाइड्स् व वीडियोज् का अपने पठन-पाठन में पर्याप्त उपयोग कर संस्कृत की सेवा में हमारा सहयोग करें। इन स्लाइड्स् को शुद्धतम बनाने का प्रयास करने पर भी ऐसा सम्भव है कि इसमें कहीं त्रुटि रह गयी हों अतः उनके सुधार के लिए हमें ईमेल द्वारा सूचित करें।



दिनाङ्कः-

06.08.2022

अस्माकं सम्पर्कसूत्राणि—
e-mail अणुवाक्— samskritsaarah@gmail.com
YOUTUBE — संस्कृतसारः @sanskrit sar
FACEBOOK— @sanskrit_shiksha संस्कृतशिक्षा

निवेदकः-

संस्कृतशिक्षा-परिवारः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भावकर्मप्रक्रिया)

# धातवः





## सकर्मकाः

### कर्मणि

**Passive voice** कर्मवाच्यः

- ❖ पदम्— आत्मनेपदमेव भवति।
- ❑ विकरणम्— यक्
- ○ लकारेषु एक-द्वि-बहुवचनेषु प्रथम-मध्यमोत्तमेषु सर्वत्र कर्मानुसारं यथायथं रूपाणि।
- ➢ कर्तरि सर्वदा तृतीया भवति।
- ✓ कर्मणः तिङ्प्रत्ययेन उक्तत्वात् कर्मवाचकात् पदात् प्रथमैव।

## अकर्मकाः

### भावे= क्रियायाम्

**Impersonal voice** भाववाच्यः

- ❖ पदम्— आत्मनेपदमेव भवति।
- ❑ विकरणम्— यक्
- ○ प्रत्येकस्यापि लकारस्य प्रथमपुरुषैकवचनमात्रे प्रयोगः।
- ➢ कर्तरि सर्वदा तृतीया भवति।
- ✓ अत्र कर्म न भवति।



संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# भावे प्रत्यये भूधातोः प्रक्रिया



❖ आत्मनेपदविधायकं विधिसूत्रम्—

सूत्रम्— भावकर्मणोः (१,३.१३)

अर्थः— भावे कर्मणि च लस्यात्मनेपदम् (स्यात्)॥

❖ यक्-प्रत्ययविधायकं विधिसूत्रम्—

सूत्रम्— सार्वधातुके यक् (३,१.६७)

अर्थः— धातोर्यक् भावकर्मवाचिनि सार्वधातुके।

- भावः क्रिया। सा च भावार्थक-लकारेणानूद्यते।
- युष्मदस्मद्भ्यां सामानाधिकरण्याभावात्प्रथमः पुरुषः।
- तिङ्वाच्यक्रियाया अद्रव्य रूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि किंत्वेकवचनमेवोत्सर्गतः।
- त्वया मया अन्यैश्च भूयते। बभूवे॥

भू+ लँट्
↓ ↓
होना होना
भू+ त
भू यक् + त
भूयते

भू+ लिँट्
भू भू + त
भू भू + एश्
भु भू + ए
भभू वुक्+ ए
बभूव्+ ए
बभूवे

त्वया → भूयते
मया → भूयते
अन्यैः → भूयते

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# भावे प्रत्यये भूधातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भावकर्मप्रक्रिया)

❖ चिण्वद्भावादिविधायकम् अतिदेशसूत्रम्—

**सूत्रम्— स्यसिँच्सीयुँट्तासिषु भावकर्मणोरुपदेशेऽज्झन-ग्रहदृशां वा चिण्वदिट् च (६,४.६२)**

**अर्थः—** उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाङ्गकार्यं वा स्यात्स्यादिषु भावकर्मणोर्गम्यमानयोः, स्यादीनामिडागमश्च। चिण्वद्भावपक्षेऽयमिट्। चिण्वद्भावाद् वृद्धिः। भाविता, भविता। भाविष्यते, भविष्यते। भूयताम्। अभूयत। भाविषीष्ट, भविषीष्ट॥

भू+ लुँट्
भू तास्+ त
भू इतास्+ त
भौ इतास्+ त
भाव् इतास्+ त
भाव् इत्+ त
भाविता

भू+ लोँट्
भू य+ ते
भूयताम्

भू+ लँङ्
अभू य+ त
अभूयत

१.उपदेशे योऽच् तदन्तानाम्
२.हन्
३.ग्रह्
४.दृश्
भावकर्मणोः

चिणि इव वा अङ्गकार्याणि= चिण्वद्भावः वा

१. स्य/२. सिँच्/
३. सीयुँट्/४. तास्
स्यादीनां इडागमः

१. अचो ञ्णिति/अत उपधायाः
२. आतो युँक् चिण्कृतोः
३. हो हन्तेर्ञ्णिन्नेषु
४. चिण्णमुलोर्दीर्घोऽन्यतरस्याम्

भू+ आशीर्लिँङ्
भू इसीय्+ स् त
भाविषीष्ट, भविषीष्ट

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# भावे प्रत्यये भूधातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भावकर्मप्रक्रिया)

❖ चिणादेशविधायकं विधिसूत्रम्—

**सूत्रम्—** चिण् भावकर्मणोः (३,१.६६)

**अर्थः—** च्लेश्चिण्स्याद्भावकर्मवाचिनि तशब्दे परे। अभावि। अभाविष्यत, अभविष्यत।

भू+ लुँङ्
अभू च्लिँ+ त
अभू चिण्+ त (चिण् भावकर्मणोः)
अभौ इ+ त (अचो ञ्णिति)
अभाव् इ+ त (एचोऽयवायावः)
अभावि+ त (चिणो लुक्)
अभावि

भाववाच्येषु एक-द्वि-बहुवचनेषु प्रथम-मध्यमोत्तमेषु एकमेकं रूपं भवति।

| लँट् | लिँट् | लुँट् | लृँट् | लोँट् | लँङ् | विधिलिँङ् | आशीर्लिँङ् | लुँङ् | लृँङ् |
|---|---|---|---|---|---|---|---|---|---|
| भूयते | बभूवे | भाविता<br>भविता | भाविष्यते<br>भविष्यते | भूयताम् | अभूयत | भूयेत | भाविषीष्ट<br>भविषीष्ट | अभावि | अभाविष्यत<br>अभविष्यत |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# सोपसर्गस्य भूधातोः कर्मणि लकारः

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भावकर्मप्रक्रिया)

❖अकर्मकोऽप्युपसर्गवशात्सकर्मकः।

भावार्थः— अकर्मकधातव अपि उपसर्गयुक्तात् कदाचित् सकर्मका भवन्ति। यतोहि उपसर्गयोगे धातोरर्थः प्रायः परिवर्त्तते तस्माद् अकर्मका अपि सकर्मकाः तथा सकर्मका अपि अकर्मका भवन्ति। धातूनामनेकार्था इति सिद्धान्तोऽप्यत्र सन्दर्भे न विस्मरणीयः।

❖अनुभूयते आनन्दश्चैत्रेण त्वया मया च।

❖अनुभूयेते। अनुभूयन्ते। त्वमनुभूयसे। अहमनुभूये। अन्वभावि। अन्वभाविषाताम्, अन्वभविषाताम्।

✓ यस्मिन्नर्थे प्रत्ययो भवति सः अर्थः— उक्तः।
❑ यस्मिन्नर्थे प्रत्ययो न भवति सः अर्थः— अनुक्तः।

✓ उक्ते कर्तृ-कर्मादौ तु प्रथमाविभक्तिर्भवति।
❑ अनुक्ते कर्तृ-कर्मादौ तु यथायथं तृतीया-द्वितीयादयः विभक्तयः भवन्ति।

कर्तृवाच्ये— चैत्रः (कर्ता १) आनन्दम् (कर्म २) अनुभव+ति (कर्ता)

कर्मवाच्ये— चैत्रेण (कर्ता ३) आनन्दः (कर्म १) अनुभूय+ते (कर्म)

अनु+अभावि=अन्वभावि

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# णिजन्ते भूधातोः कर्मणि लकारः



❖ णिलोपः। भाव्यते।

❖ भावयाञ्चक्रे, भावयाम्बभूवे, भावयामासे।

❖ चिण्वदिट्। आभीयत्वेनासिद्धत्वाण्णिलोपः— भाविता, भावयिता। भाविष्यते, भावयिष्यते।

❖ अभाव्यत। भाव्येत। भाविषीष्ट, भावयिषीष्ट। अभावि। अभाविषाताम्, अभावयिषाताम्॥

✓ अकर्मकाः धातवोऽपि ण्यन्ताः सकर्मकाः भवन्ति। तेन कर्मणि एव प्रत्ययो भवति, न तु भावे प्रत्ययः उचितः।

भू + णिच्
भावि
भावि + त
भावि य + त (सार्वधातुके यक्)
भाव् य + त (णेरनिटि)
भाव्यते

भावि तास् + त
भावि इतास् + त (स्यसिँच्सीयुँट्...६.४.६२)
भाव् इतास् + त (णेरनिटि- ६.४.५१)
भाविता, भावयिता

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# सन्नन्ते भूधातोः भावे लकारः



❖ बुभूष्यते। बुभूषाञ्चक्रे। बुभूषिता। बुभूषिष्यते।

भू + सन्
बुभूष
बुभूष + त
बुभूष य + त (सार्वधातुके यक्)
बुभूष् य + त (अतो लोपः)
बुभूष्यते

✓ 'पूर्ववत्सनः' इति सूत्रेण अकर्मकप्रकृतिकास्तु सन्नन्ताः अकर्मका एव तेन भावे प्रत्ययसिद्धिः, सकर्मकप्रकृतिकास्तु सन्नन्ता एव तेन कर्मणि प्रत्ययसिद्धिः।

चिण्वदिट्पक्षे तदभावपक्षे च एकमेवरूपम्— बुभूषिता

# यङन्ते यङ्लुगन्ते च भूधातोः भावे लकारः



- ❖ बोभूय्यते।
- ❖ बोभूयते।

भू + यङ्
बोभूय
बोभूय यक् + त (सार्वधातुके यक्)
बोभूय् य + ते (अतो लोपः)
बोभूय्यते

✓ यङ्-यङ्लुकोस्तु प्रकृतिवत्सकर्मकाकर्मकेति बोध्यम्। तेन प्रकृतिभूतधातोः सकर्मकत्वात् कर्मणि लकारः प्रकृतिभूतधातोरकर्मकत्वाद् भावे लकारो बोध्यः।

बोभू यक् + त (यङ्लुक्)
बोभू य + ते
बोभूयते

# सकर्मकाणां 'स्तु-ऋ-स्मृ' धातूनां कर्मणि लकारः



❖ अकृत्सार्वधातुकयोर्दीर्घः— स्तूयते विष्णुः। स्ताविता, स्तोता। स्ताविष्यते, स्तोष्यते। अस्तावि। अस्ताविषाताम्, अस्तोषाताम्॥

❑ ऋ गतौ। गुणोऽर्तिसंयोगाद्योरिति गुणः— अर्यते॥

❑ स्मृ स्मरणे। स्मर्यते। सस्मरे। उपदेशग्रहणाच्चिण्वदिट्— आरिता, अर्ता। स्मारिता, स्मर्ता।

स्तु य + त (सार्वधातुके यक्)
स्तू य + ते (अकृत्सार्वधातुकयोर्दीर्घः)
स्तूयते

ऋ य + त
अर् य + ते
अर्यते

स्मृ य + त
स्मर् य + ते
स्मर्यते

अर् तास् + आ
आर् इत् + आ = आरिता

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अकर्मक'स्रंस्-नन्द्' धातोः, सकर्मक'यज्-तन्' धातोः, सकर्मकाकर्मक'तप्' धातोः प्रक्रिया



❖ अनिदितामिति नलोपः— स्रस्यते।

❖ इदितस्तु — नन्द्यते ।

❖ संप्रसारणम् — इज्यते॥

❖ आकारान्तादेशविधायकं विधिसूत्रम्—

सूत्रम्— तनोतेर्यकि (६,४.४४)

अर्थः— आकारोऽन्तादेशो वा स्यात्। तायते, तन्यते॥

❖ चिण्निषेधकं सूत्रम्—

सूत्रम्— तपोऽनुतापे च (३,१.६५)

अर्थः— तपश्च्लेश्चिण् न स्यात् कर्मकर्तर्यनुतापे च। अन्वतप्त पापेन।

स्रंस् य + त
स्रस् य + ते (अनिदिताम...)
स्रस्यते

यज् य + त
इज् य + ते
इज्यते

नन्द् य + ते
नन्द्यते

तन् य + ते
त आ य + ते
तायते, तन्यते

अ तप् च्लिँ + त
अ तप् स् + त
अनु+ अतप्त =
अन्वतप्त

# आदन्तेषु सकर्मक'दा-धा' धातोः कर्मणि लकारः



❖ घुमास्थेतीत्वम्— दीयते। धीयते। ददे॥

❖ युँगागमविधायकं विधिसूत्रम्—

**सूत्रम्—** आतो युँक् चिण्कृतोः (७,३.३३)

**अर्थः—** आदन्तानां युँगागमः स्याच्चिणि ञ्णिति कृति च।

❖ दायिता, दाता। दायिषीष्ट, दासीष्ट। अदायि। अदायिषाताम्॥

दा य + ते
दी य + ते (घुमास्थागापाजहातिसां हलि)
दीयते

दा इ तास्+ आ
दाय् इ तास्+ आ (स्यसिँच्सीयुँट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च)
दायिता, दाता

# सकर्मक 'भञ्ज्-लभ्' धातोः कर्मणि लकारः



❖ भज्यते ॥

❖ वैकल्पिक-नलोपविधायकं विधिसूत्रम्—

सूत्रम्— भञ्जेश्च चिणि (६,४.३३)

अर्थः— नलोपो वा स्यात्। अभाजि, अभञ्जि ॥

❖ लभ्यते ॥

❖ वैकल्पिक-नुँमागमविधायकं विधिसूत्रम्—

सूत्रम्— विभाषा चिण्णमुलोः (७,१.६९)

अर्थः— लभेर्नुँमागमो वा स्यात्।

अलम्भि, अलाभि ॥

॥ इति भावकर्मप्रक्रिया ॥

भञ्ज् य + ते

भज् य + ते (अनिदिताम...)

भज्यते

अभञ्ज् च्लिँ + त

अभज् इ + (अत उपधायाः)

अभाजि, अभञ्जि

अलभ् च्लिँ + त

अलन् भ् इ + त (अनुस्वारपरसवर्णौ)

अलम्भि, अलाभि ॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः


❖ लुँङि प्रायः च्लेः स्थाने सिचोऽपवादः चिण् भवति।

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भावकर्मप्रक्रिया)

लँट्-लोँट्-लँङ्-विधिलिँङ्लकारेषु— यक्-विकरणम्।

**भावकर्मणि ध्यातव्यांशाः**

1. उपधानलोपः — स्रस्यते
2. रिङादेशः — क्रियते म्रियते
3. इकारादेशः — कीर्यते तीर्यते
4. उकारादेशः — पूर्यते
5. सम्प्रसारणम् — इज्यते उह्यते
6. गुणः — अर्यते स्मर्यते
7. ईत्वम् — दीयते धीयते
8. दीर्घः — जीयते स्तूयते

1. **अनिदितां हल उपधायाः क्ङिति—** अनिदितां हलन्तानां धातोः।
2. **रिङ् शयक्लिङ्क्षु—** ऋकारान्तस्य धातोः।
3. **ॠत इद्धातोः—** ॠदन्तधातोः।
4. **उदोष्ठ्यपूर्वस्य—** ओष्ठ्यपूर्वस्य ॠदन्तस्य।
5. **वचिस्वपियजादीनां किति—** वच्स्वप्-यजादिधातोः।
6. **गुणोऽर्तिसंयोगाद्योः—** ऋ-धातोः संयोगादि-ऋदन्तस्य।
7. **घुमास्थागापाजहातिसां हलि—** घुसञ्ज्ञकानां मास्थादीनाम्।
8. **अकृत्सार्वधातुकयोर्दीर्घः—** अजन्तधातोः।
9. **तनोतेर्यकि, आदेच् उपदेशेऽशिति—** (आत्वम्) तायते तन्यते।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# कर्तृकर्मवाच्यप्रयोगरीतिः

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भावकर्मप्रक्रिया)

## कर्तृवाच्यः प्रयोगः

❖ लक्षणं कर्तृवाच्यस्य प्रथमा कर्तृकारके ।
द्वितीयान्तं भवेत् कर्म कर्त्रधीनं क्रियापदम् ॥

यथा –

| १ कर्ता | कर्म २ | क्रिया |
|---|---|---|
| कुम्भकारः | घटं | करोति । |
| देवदत्तः | ग्रामं | गच्छति । |
| शिशुः | पुस्तकं | पठति । |

कर्त्रधीनं क्रियापदं यथा –

| | | |
|---|---|---|
| कुम्भकारः | घटं | करोति। |
| कुम्भकारौ | घटं | कुरुतः। |
| कुम्भकाराः | घटं | कुर्वन्ति । |
| शिशुः | पुस्तकं | पठति। |
| शिशू | पुस्तकं | पठतः। |
| शिशवः | पुस्तकं | पठन्ति ॥ |

## कर्मवाच्यः प्रयोगः

➢ प्रयोगे कर्मवाच्यस्य तृतीया कर्तृकारके ।
प्रथमान्तं भवेत्कर्म कर्माधीनं क्रियापदम् ॥

यथा –

| ३ कर्ता | कर्म १ | क्रिया |
|---|---|---|
| कुम्भकारेण | घटः | क्रियते । |
| शिष्येण | गुरुः | पृच्छयते । |
| मया | चन्द्रः | दृश्यते । |

कर्माधीनं क्रियापदं यथा –

| | | |
|---|---|---|
| कुम्भकारेण | घटः | क्रियते। |
| कुम्भकारेण | घटौ | क्रियेते। |
| कुम्भकारेण | घटाः | क्रियन्ते। |
| शिष्येण | गुरुः | पृच्छयते। |
| शिष्येण | गुरू | पृच्छयेते। |
| शिष्येण | गुरवः | पृच्छयन्ते ॥ |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# भाववाच्यप्रयोगरीतिः

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भावकर्मप्रक्रिया)

❖ भाववाच्यप्रयोगे तु तृतीया कर्तृकारके ।
प्रथमपुरुषस्यैकवचनान्तं क्रियापदम् ॥

३ कर्ता↓ कर्म↓ क्रिया↓

| कर्ता | कर्म | क्रिया |
|---|---|---|
| ❖ यथा – मया |  | स्थीयते। |
| आवाभ्यां | | स्थीयते। |
| अस्माभिः | | स्थीयते । |
| त्वया | | भूयते। |
| मया | | भूयते। |
| अन्यैः | | भूयते। |

भाववाच्यः प्रयोगः

कर्मवाच्ये प्रयोगः स्याद् धातूनां हि सकर्मणाम् ।
आत्मनेपदमेव स्याद् वाच्ययोः कर्मभावयोः ॥

भावाच्ये क्रिया वक्ति न कर्तारं न कर्म च।
तत्र कर्ता तृतीयायां क्रिया भावानुसारिणी॥
भावे तु कर्मवाच्यक्रियैकवचने प्रथमपुरुषे ।
सा चेद्भवेद्कृदन्ता क्लीबप्रथमैकवचने स्यात् ॥

अर्थः— भाववाच्य में क्रिया कहने वाली होती है, न कर्ता कहता है न कर्म। वहाँ कर्ता में तृतीया होती है और क्रिया भाव के अनुसार होती है। भाव में तो कर्मवाच्य की क्रिया प्रथम पुरुष एकवचन में होती है और वह क्रिया कृदन्त होनी चाहिए जो नपुंसकलिङ्ग प्रथमा एकवचन में हो ।

❖ अकर्मकधातूनां कर्मवाच्यसदृशं रूपं यस्मिन् प्रयोगे दृश्यते सः भाववाच्य-प्रयोगः। अत्र क्रिया केवलं भावं सूचयति ॥ अतः सा सदैव केवलं प्रथमपुरुषैकवचने प्रयुज्यते । सा कर्तुः लिङ्गपुरुषवचनानि नैव अनुसरति । यत्र लिङ्गम् अपेक्षितं तत्र नपुंसकलिङ्गकवचनमेव प्रयुज्यते । कृदन्ते क्रिया-प्रयोगे कृते सति सा नपुंसकलिङ्गप्रथमैकवचने एव स्यात् ।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# किमिदं वाच्यपरिवर्तनम्



- संस्कृतभाषायां त्रीणि वाच्यानि भवन्ति— कर्तृवाच्यं कर्मवाच्यं भाववाच्यं च। क्रियया कथितं कथनप्रकारं वाच्यम् उच्यते। कर्तृ-कर्म-भावेषु क्रियया एव कथ्यते। अतः क्रिया कर्तृवाच्ये कर्म भाववाच्ये वा भवति।
- 'पठति' इति कथिते सति प्रश्नः समुदेति यत् 'कः पठति ?' अस्य उत्तररूपेण कथ्यते— 'कोऽपि पठनकर्ता पठति' इति। अनेन प्रकारेणात्र क्रियया कर्ता सूच्यते, अतः 'पठति' इत्यत्र कर्तृवाच्यमस्ति।
- 'पठ्यते' इति कथिते सति प्रश्नः समुदेति 'किम् पठ्यते' इति। उत्तररूपेण कथयितुं शक्यते यत् कोऽपि ग्रन्थः किमपि पुस्तकं वा पठ्यते। अनेन स्पष्टं यद् अत्र पठ्यते क्रियया कर्म उच्यते। अतः 'पठ्यते' इत्यत्र कर्मवाच्यमस्ति।
- यासां क्रियाणां कर्म न भवति ताः अकर्मकक्रियाः कथ्यन्ते, यथा— 'हस्', 'शी' इत्यादयः। संस्कृतभाषायां अकर्मकक्रियाभिः भाववाच्यं कर्तृवाच्यं च भवति। तत्र कर्मणः अविद्यमानत्वात् कर्मवाच्यं कर्तुं न शक्यते। उदाहरणार्थं 'स्वप्' अकर्मक अस्ति। तत्र भाववाच्यं 'सुप्यते' भविष्यति। भावस्य अर्थ अस्ति 'क्रिया'। अर्थात् 'सुप्यते' पदेन नैव कर्ता कथ्यते नापि कर्म कथ्यते, अपितु क्रिया एवं कथ्यते। अतः 'सुप्यते' भाववाच्यमस्ति।

स्रोतः—https://rajboardexam.in/10th-sanskritvachy-parivartanm/ DATE- 21.07.2022

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# वाच्यपरिवर्तनस्य साधारणनियमाः



1. सर्वादौ कर्तारं कर्म क्रियाम् अन्वेषयतु, ततः तेषां विशेषणानप्यन्वेषयतु।
2. तदनु सकर्मकाम् अकर्मकां वा क्रियां दृष्ट्वा वाच्यं स्थिरीकरोतु।
3. यदि कर्तरि प्रथमा (१) कर्मणि द्वितीया (२) तदा कर्मवाच्यं भवति।
4. यदि कर्तरि तृतीया(३) कर्मणि प्रथमा (१) तदा कर्मवाच्यं भवति।
5. यदि कर्तरि तृतीया (३) कर्मपदस्याभावो तदा भाववाच्यं भवति।
6. यदा तिङन्तप्रयोगे कृदन्तप्रयोगे वा कर्तृकर्मवाच्यस्थले समानं रूपं भवति तदा कर्तृपदं कर्मपदं वा वीक्ष्य वाच्यम् अभिजानातु।
   - यथा तिङन्ते कर्तृवाच्ये— (रामः) रसं पीयते (पीङ् पाने दैवादिकः)। कर्मवाच्ये— (रामेण) रसः पीयते।
   - कृदन्ते कर्तृवाच्ये— रामः ग्रामं गतः। कर्मवाच्ये— रामेण ग्रामः गतः।
7. क्रिया यस्य कालस्य लकारस्य वा भवति, वाच्यपरिवर्तनमपि तस्मिन् काले लकारे च भवति। यथा कर्तृवाच्ये— स उक्तवान्। कर्मवाच्ये— तेन उक्तम्। तिङन्ते कर्तृवाच्ये यथा— सा गच्छति। कर्मवाच्ये— तया गम्यते।
8. भूतकालिक/वर्तमानकालिककृदन्तेनापि तिङन्तानां वाच्यपरिवर्तनं भवति। यथा कर्तृवाच्ये— अहं सिंहम् अपश्यम्। कर्मवाच्ये— मया सिंहो दृष्टः।

कृदन्तप्रत्यया अपि कर्त्तरि कर्मणि भावादौ च भवन्ति।

# वाच्यपरिवर्तनस्य साधारणनियमाः



9. कर्तुः कर्मणोः यानि विशेषणानि भवन्ति तेष्वपि कर्तृकर्मवद् विभक्तिः वचनं लिङ्गं च भवति।

यथा कर्तृवाच्ये – शयानाः मूर्खाः भुञ्जते।

कर्मवाच्ये – शयानैः मूर्खैः भुज्यते।

"कर्तृ-कर्म - क्रियाश्चैव कर्तृ-कर्म-विशेषणम् ।
वाच्यान्तरं कर्तु मिच्छुरेतानि परिवर्तयेत् ॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# पठ्धातुना सह सर्वनामशब्दानां वाच्यपरिवर्तनाभ्यासः-१

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भावकर्मप्रक्रिया)

| कर्तृवाच्यम् | कर्मवाच्यम् |
|---|---|
| भवान्/ सः पठति। (आप / वह पढ़ता है) | भवता/ तेन पठ्यते। (आपके/ उसके द्वारा पढ़ा जाता है।) |
| भवन्तौ / तौ पठतः ।(आप दोनों वे दोनों पढ़ते हैं।) | भवद्भ्याम् / ताभ्यां पठ्यते । (आप दोनों / उन दोनों के द्वारा पढ़ा जाता है।) |
| भवन्तः/ ते पठन्ति । (आप सब वे सब पढ़ते हैं।) | भवद्भिः/ तैः पठ्यते । (आप/ सब उन सबके द्वारा पढ़ा जाता है।) |
| भवती/सा पठति। (आप / वह पढ़ती है।) | भवत्या/ तया पठ्यते । (आप/ उसके द्वारा पढ़ा जाता है।) |
| भवत्यौ /ते पठतः। (आप दोनों वे दोनों पढ़ती हैं।) | भवतीभ्याम् / ताभ्यां पठ्यते। (आप दोनों दोनों के द्वारा पढ़ा जाता है।) |
| भवत्यः/ ताः पठन्ति (आप सब/ वे सब पढ़ती हैं। ) | भवतीभिः / ताभिः पठ्यते । (आप सब/ उन सब के द्वारा पढ़ा जाता है।) |
| त्वं पठसि (तुम पढ़ते/ पढ़ती हो) | त्वया पठ्यते । (तुम्हारे द्वारा पढ़ा जाता है।) |
| युवां पठथः। (तुम दोनों पढ़ते/ पढ़ती हो।) | युवाभ्यां पठ्यते। (तुम दोनों के द्वारा पढ़ा जाता है।) |
| यूयं पठथः (तुम सब पढ़ते/ पढ़ती हो।) | युष्माभिः पठ्यते । (तुम सबके द्वारा पढ़ा जाता है। ) |
| अहं पठामि। (मैं पढ़ता / पढ़ती हूँ।) | मया पठ्यते। (मेरे द्वारा पढ़ा जाता है।) |
| आवां पठावः (हम दोनों पढ़ते /पढ़ती हैं।) | आवाभ्यां पठ्यते। (हम दोनों के द्वारा पढ़ा जाता है।) |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# पठ्धातुना सह सर्वनामशब्दानां वाच्यपरिवर्तनाभ्यासः-२

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भावकर्मप्रक्रिया)

| कर्तृवाच्यम् | कर्मवाच्यम् |
| --- | --- |
| वयं पठामः । (हम सब पढ़ते/ पढ़ती हैं।) | अस्माभिः पठ्यते। (हम सबके द्वारा पढ़ा जाता है।) |
| एषः/ अयं बालकः पठति। (यह बालक पढ़ता है) | एतेन / अनेन बालकेन पठ्यते। (इस बालक के द्वारा पढ़ा जाता है। ) |
| एषा/ इयं बालिका पठति। (यह बालिका पढ़ती है।) | एतया / अनया बालिकया पठ्यते। (इस बालिका के द्वारा पढ़ा जाता है।) |
| एतौ/ इमौ बालकौ पठतः । ( ये दोनों बालक पढ़ते हैं।) | एताभ्यां / आभ्यां बालकाभ्यां पठ्यते । (इन दोनों बालकों के द्वारा पढ़ा जाता है।) |
| एते / इमे बालिके पठतः । (ये दोनों बालिकायें पढ़ती हैं।) | एताभ्यां / आभ्यां बालिकाभ्यां पठ्यते । (इन दोनों बालिकाओं द्वारा पढ़ा जाता है।) |
| एते/ इमे बालकाः पठन्ति । (ये सब बालक पढ़ते हैं। ) | एतैः / एभिः बालकैः पठ्यते (इन सब बालकों द्वारा पढ़ा जाता है।) |
| एताः / इमाः बालिकाः पठन्ति । ( ये सब बालिकायें पढ़ती हैं।) | एताभिः/आभिः बालिकाभिः पठ्यते ।(इन सब बालिकाओं द्वारा पढ़ा जाता है।) |
| अहं श्लोकं पठामि। (मैं श्लोक पढ़ता हूँ।) | मया श्लोकः पठ्यते। (श्लोक मेरे द्वारा पढ़ा जाता है।) |
| अहं श्लोकौ पठामि। (मैं दो श्लोक पढ़ता हूँ।) | मया श्लोकौ पठ्येते (मेरे द्वारा दो श्लोक पढ़े जाते हैं।) |
| अहं श्लोकान् पठामि। (मैं श्लोकों को पढ़ता हूँ।) | मया श्लोकाः पठ्यन्ते। (श्लोक मेरे द्वारा पढ़े जाते हैं।) |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# पठ्धातुना सह सर्वनामशब्दानां वाच्यपरिवर्तनाभ्यासः-३

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भावकर्मप्रक्रिया)

| कर्तृवाच्यम् | कर्मवाच्यम् |
|---|---|
| अहं पुस्तकं पठामि। (मैं पुस्तक पढ़ता हूँ।) | मया पुस्तकं पठ्यते । (पुस्तक मेरे द्वारा पढ़ी जाती है। ) |
| अहं पुस्तके पठामि। (मैं दो पुस्तक पढ़ता हूँ।) | मया पुस्तके पठ्येते । (मेरे द्वारा दो पुस्तकें पढ़ी जाती हैं। ) |
| अहं पुस्तकानि पठामि (मैं पुस्तकों को पढ़ता हूँ।) | मया पुस्तकानि पठ्यन्ते (पुस्तकें मेरे द्वारा पढ़ी जाती हैं। ) |
| अहं कथां पठामि। (मैं कथा पढ़ता हूँ।) | मया कथा पठ्यते । (कथा मेरे द्वारा पढ़ी जाती है।) |
| अहं कथे पठामि। (मैं दो कथा पढ़ता हूँ।) | मया कथे पठ्येते । (दो कथा मेरे द्वारा पढ़ी जाती हैं।) |
| अहं कथाः पठामि। (मैं कथाओं को पढ़ता हूँ।) | मया कथाः पठ्यन्ते । (कथाएँ मेरे द्वारा पढ़ी जाती हैं।) |
| त्वं ग्रन्थं पठसि । (तू ग्रन्थ पढ़ता है ।) | त्वया ग्रन्थः पठ्यते । (तुम्हारे द्वारा ग्रन्थ पढ़ा जाता है ।) |



संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# विविधधातुभिः सह वाच्यपरिवर्तनाभ्यासः-४

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भावकर्मप्रक्रिया)

| कर्तृवाच्यम् | कर्मवाच्यम् |
|---|---|
| अहं त्वां पश्यामि। (मैं तुझे देखता हूँ।) | मया त्वं दृश्यसे। (मेरे द्वारा तुम देखे जाते हो।) |
| सः मां पश्यति। ( वह मुझे देखता है।) | तेन अहं दृश्ये। (उसके द्वारा मैं देखा जाता हूँ।) |
| वयं तान् पश्यामः। (हम उन्हें देखते हैं।) | अस्माभिः ते दृश्यन्ते। (हमारे द्वारा वे देखे जाते हैं।) |
| मृगयुः व्याघ्रं हन्ति। (शिकारी बाघ को मारता है।) | मृगयुना व्याघ्रः हन्यते। (शिकारी द्वारा बाघ मारा जाता है।) |
| अहं गृहं गच्छामि। (मैं घर को जाता हूँ।) | मया गृहं गम्यते। (मेरे द्वारा घर जाया जाता है।) |
| चञ्चलः बालकः स्वकीयं पाठं पठति।<br>( चंचल बालक अपना पाठ याद करता है। ) | चञ्चलेन बालकेन स्वकीयः पाठः पठ्यते।<br>( चंचल बालक द्वारा अपना पाठ पढ़ा जाता है। ) |
| जनाः कथां शृण्वन्ति। (लोग कथा सुनते हैं।) | जनैः कथा श्रूयते। (लोगों द्वारा कथा सुनी जाती है।) |
| बालकाः वृक्षान् सिञ्चन्ति (बालक वृक्षों को सींचता है। | बालकैः वृक्षाः सिच्यन्ते। (बालक द्वारा वृक्ष सींचे जाते हैं।) |
| बालकाः फलानि खादन्ति। (बालक फल खाते हैं।) | बालकैः फलानि खाद्यन्ते। (बालकों द्वारा फल खाये जाते हैं।) |
| पुत्रः पितरं सेवते। (पुत्र पिता की सेवा करता है) | पुत्रेण पिता सेव्यते। (पुत्र के द्वारा पिता की सेवा की जाती है) |

# विविधधातुभिः सह वाच्यपरिवर्तनाभ्यासः-५



| कर्मवाच्यम् | कर्तृवाच्यम् |
|---|---|
| अस्माभिः गीतं गीयते। (हमारे द्वारा गीत गाया जाता है।) | वयं गीतं गायामः। (हम गीत गाते हैं।) |
| तेन दुग्धं पीयते। (उसके द्वारा दूध पिया जाता है।) | स दुग्धं पिबति। ( वह दूध पीता है।) |
| रामेण रावणः हन्यते। (राम द्वारा रावण मारा जाता है।) | रामः रावणं हन्ति। (राम रावण को मारता है।) |
| आवाभ्यां विद्यालयः गम्यते। (हम दोनों द्वारा विद्यालय जाया जाता है।) | आवां विद्यालयं गच्छावः। (हम दोनों विद्यालय जाते हैं।) |
| मया त्वं ताड्यसे। (मेरे द्वारा तुम पीटे जाते हो।) | अहं त्वां ताडयामि। (मैं तुम्हें पीटता हूँ।) |
| ईश्वरेण सर्वे रक्ष्यन्ते। ( ईश्वर द्वारा सबकी रक्षा की जाती है।) | ईश्वरः सर्वान् रक्षति। ( ईश्वर सबकी रक्षा करता है।) |
| सर्वैः ईश्वरः पूज्यते। (सभी के द्वारा ईश्वर पूजा जाता है।) | सर्वे ईश्वरं पूजयन्ति। (सभी ईश्वर को पूजते हैं।) |
| त्वया कन्दुकेन क्रीड्यते। (तुम्हारे द्वारा गेंद से खेला जाता है।) | त्वं कन्दुकेन क्रीडसि। (तुम गेंद से खेलते हो।) |
| रावणेन सीता अपह्रियते। (रावण द्वारा सीता का अपहरण किया जाता है।) | रावणः सीताम् अपहरति। (रावण सीता का अपहरण करता है।) |
| तैर्देवा इज्यन्ते। (उनके द्वारा देवता पूजे जाते हैं।) | ते देवान् यजन्ति। (वे देवताओं को पूजते हैं।) |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# विविधधातुभिः सह वाच्यपरिवर्तनाभ्यासः-६

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भावकर्मप्रक्रिया)

| कर्तृवाच्यम् | भाववाच्यम् |
|---|---|
| बालिका हसति। (लड़की हँसती है।) | बालिकया हस्यते। (लड़की द्वारा हँसा जाता है।) |
| शिशुः रोदिति। ( बच्चा रोता है।) | शिशुना रुद्यते। ( बच्चे द्वारा रोया जाता है।) |
| आवां क्रीडावः। (हम दोनों खेलते हैं।) | आवाभ्यां क्रीड्यते। (हम दोनों द्वारा खेला जाता है।) |
| वयं हसामः। (हम हँसते हैं।) | अस्माभिः हस्यते। (हमारे द्वारा हँसा जाता है।) |
| अश्वाः धावन्ति। (घोड़े दौड़ते हैं।) | अश्वैः धाव्यते। (घोड़ों द्वारा दौड़ा जाता है।) |
| मनुष्याः तिष्ठन्ति। (मनुष्य बैठते हैं।) | मनुष्यैः स्थीयते। (मनुष्यों द्वारा बैठा जाता है।) |
| पीडिताः क्रन्दन्ति। (पीड़ित क्रन्दन करते हैं।) | पीडितैः क्रन्द्यते। (पीड़ितों द्वारा चीखा जाता है।) |
| रामः चिन्तयति। (राम सोचता है।) | रामेण चिन्त्यते। (राम के द्वारा सोचा जाता है।) |
| अहं स्वपिमि। (मैं सोता हूँ।) | मया सुप्यते। (मेरे द्वारा सोया जाता है।) |
| शिशुः शेते। ( बच्चा सोता है।) | शिशुना शय्यते। ( बच्चे द्वारा सोया जाता है।) |

# विविधधातुभिः सह वाच्यपरिवर्तनाभ्यासः-७



| भाववाच्यम् | कर्तृवाच्यम् |
|---|---|
| मात्रा सुप्यते। (माता द्वारा सोया जाता है।) | माता स्वपिति। (माता सोती है।) |
| तेन रुद्यते। (उसके द्वारा रोया जाता है।) | सः रोदिति। ( वह रोता है।) |
| मुनिना तप्यते। ( मुनि द्वारा तप किया जाता है।) | मुनिः तपति। ( मुनि तप करता है।) |
| मया हस्यते। (मेरे द्वारा हँसा जाता है।) | अहं हसामि। (मैं हँसता हूँ।) |
| श्रीमता आस्यते। ( श्रीमान् द्वारा बैठा जाता है।) | श्रीमान् आस्ते। (श्रीमान् बैठते हैं।) |
| तैः स्थीयते। (उनके द्वारा बैठा जाता है।) | ते तिष्ठन्ति। (वे बैठते हैं।) |
| मया चिन्त्यते। ( मेरे द्वारा सोचा जाता है।) | अहं चिन्तयामि। ( मैं सोचता हूँ।) |
| तेन भूयते। ( उसके द्वारा हुआ जाता है।) | सः भवति। ( वह होता है।) |
| रामेण उष्यते। (राम द्वारा रहा जाता है।) | रामः वसति। (राम रहता है।) |
| त्वया कर्तुं शक्यते (तुम्हारे द्वारा किया जा सकता है।) | त्वं कर्तुं शक्नोषि। (तुम कर सकते हो।) |

# भावकर्मवाच्ययोः पद्यमयोऽभ्यासः-८



**भाववाच्यम्**

क्लिश्यते पापिभिर्नित्यं, हृष्यते साधुभिः सदा ।
म्रियते प्राणिभिः सर्वैः, जीव्यते हि यशस्विना ॥
पापाद् विरम्यते सद्भिः, अज्ञैर्विपदि मुह्यते ।
स्वगेहे स्पद्र्ध्यते मूर्खैः, बुधैः सदसि दीप्यते ॥
स्थीयते तत्र रामेण । मतिः पापेन हीयते । वने रामेण शय्यते ।

**कर्मवाच्यम्**

सज्जनैः सेव्यते धर्मः, प्रजाभिः पूज्यते नृपः ।
मूर्खेण लभ्यते दुःखम्, पण्डितैः प्राप्यते सुखम् ॥
वन्द्येते पितरौ पुत्रैः, पितृभ्यां पाल्यते सुतः ।
अस्माभिर्दृश्यते राजा, राज्ञा दृश्यामहे वयम् ॥
जीयन्ते रिपवो राज्ञां श्रूयन्ते निनदा नरैः ॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लकारान्तरेष्वपि वाच्यपरिवर्तनाभ्यासः- ९

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भावकर्मप्रक्रिया)

| कर्तृवाच्यम् | भाव/कर्मवाच्यम् |
|---|---|
| त्वं घटं कुरु। (लोँट्) | त्वया घटः क्रियताम्। |
| कोऽत्र स्थास्यति। (लृँट्) | केनात्र स्थायिष्यते। |
| असौ धनम् अलब्ध। (लुँङ्) | अमुना धनम् अलम्भि/अलाभि। |
| नृपो रूपम् अद्राक्षीत्। (लुँङ्) | नृपेण रूपम् अदर्शि। |
| यूयं कार्यम् अकार्ष्ट। (लुँङ्) | युष्माभिः कार्यम् अकारि। |
| नाहं पास्यामि जलम्। (लृँट्) | न मया पास्यते जलम्। |
| कवयो महेश्वरम् अस्ताविषुः। (लुँङ्) | कविभिर्महेश्वरोऽस्तावि। |
| स नृपं स्तोता। (लुँट्) | तेन नृपः स्ताविता। |
| भवान् पुनर्दर्शनाय गच्छतु। (लोँट्) | भवता पुनर्दशनाय गम्यताम्। |
| प्रसिद्धः पुरुषो भवेत्। (विधिलिँङ्) | प्रसिद्धेन पुरुषेण भूयेत। |

# द्विकर्मकधातूनां वाच्यपरिवर्तनस्य नियमाः



प्रश्नः— संस्कृतभाषायां केचन धातवः द्विकर्मकाः सन्ति। कर्मवाच्ये तत्र कस्मिन् कर्मणि लकारः स्यात् ?

उत्तरम्— गौणे कर्मणि दुह्यादेः प्रधाने नी-हृ-कृष्-वहाम्।
बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया॥ (महाभाष्ये)

अर्थः— दुहादि १२ धातुओं के अप्रधान कर्म में तथा नी-हृ-कृष्-वह् के प्रधान कर्म में तथा ज्ञानार्थक भक्षणार्थक व शब्दकर्मक धातुओं के किसी भी कर्म में इच्छानुसार लकार विधान करना चाहिए॥

द्विकर्मकधातवः के ?

दुह्याच्पच्दण्ड्-रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्।
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्॥ १॥

संस्कृतसार: छिद्यन्ते सर्वसंशयाः

# विविधधातुभिः सह वाच्यपरिवर्तनाभ्यासः-१०

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भावकर्मप्रक्रिया)

| कर्तृवाच्यम् | भाववाच्यम् |
|---|---|
| गोपेन गौः दुग्धं दुह्यते । | बालिकया हस्यते । (लड़की द्वारा हँसा जाता है।) |
| हरिणा बलिः वसुधां याच्यते । | शिशुना रुद्यते । ( बच्चे द्वारा रोया जाता है ।) |
| आवां क्रीडावः । (हम दोनों खेलते हैं ।) | आवाभ्यां क्रीड्यते । (हम दोनों द्वारा खेला जाता है ।) |
| वयं हसामः । (हम हँसते हैं ।) | अस्माभिः हस्यते । (हमारे द्वारा हँसा जाता है ।) |
| अश्वाः धावन्ति । (घोड़े दौड़ते हैं ।) | अश्वैः धाव्यते । (घोड़ों द्वारा दौड़ा जाता है । ) |
| मनुष्याः तिष्ठन्ति । (मनुष्य बैठते हैं ।) | मनुष्यैः स्थीयते । (मनुष्यों द्वारा बैठा जाता है ।) |
| पीडिताः क्रन्दन्ति । (पीड़ित क्रन्दन करते हैं ।) | पीडितैः क्रन्द्यते । (पीड़ितों द्वारा चीखा जाता है ।) |
| रामः चिन्तयति । (राम सोचता है ।) | रामेण चिन्त्यते । (राम के द्वारा सोचा जाता है ।) |
| अहं स्वपिमि । (मैं सोता हूँ ।) | मया सुप्यते । (मेरे द्वारा सोया जाता है ।) |
| शिशुः शेते । ( बच्चा सोता है ।) | शिशुना शय्यते । ( बच्चे द्वारा सोया जाता है ।) |

# किमर्थं कर्मकर्तृप्रकरणम् ?



* एकस्मिन्नेव पचादिधातुप्रयोगे 'चैत्रो वह्निना स्थाल्यां तण्डुलं पचति' इत्यत्र कर्तृकरणाधिकरणकर्मकारकाणां मेलनं दृश्यते तत्र चैत्रस्य कर्तृत्वाविवक्षायां करणादीनामेव कर्तृत्वविवक्षायाम् 'वह्निः पचति', 'स्थाली पचति', 'तण्डुलः पच्यते' इति प्रयोगः। सम्प्रदानापादानयोस्तु 'विप्राय गां ददाति, ग्रामादायाति' इत्यादौ न कदापि कर्तृत्वविवक्षा, अनुभवविरोधात्। एवं स्थिते यत्र कर्मणः कर्तृत्वविवक्षा तत्र कर्तरि प्रत्यये 'पच्यते तण्डुलः' इति, भावे प्रत्यये 'तण्डुलेन पच्यते' इति, पचेरकर्मकत्वेन कर्तृभावयोरेव 'लः कर्मणि—' इति नियमेन प्रत्ययस्यौचित्यात्, इत्येतदर्थजातं बोधयितुं प्रकरणमारभ्यते॥

❖ यदा कर्मैव कर्तृत्वेन विवक्षितं तदा सकर्मकाणामप्यकर्मकत्वात्कर्तरि भावे च लकारः॥

❖ कार्यातिदेशसूत्रम्—

**सूत्रम्— कर्मवत्कर्मणा तुल्यक्रियः (३,१.८७)**

**अर्थः— कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यात्।**

भावार्थः— कर्मस्थया क्रियया तुल्यक्रिये लकारवाच्ये लकारवाच्ये कर्तरि कर्मणि इव कार्याणि स्युः।

➢ कार्यातिदेशोऽयम्। तेन यगात्मनेपदचिण्वदिटः स्युः।

➢ पच्यते फलम्। भिद्यते काष्ठम्। अभेदि। भावे, भिद्यते काष्ठेन॥

॥ इति कर्मकर्तृप्रक्रिया॥

कर्तृवाच्यम्— कालः फलं पचति।
कर्मवाच्यम्— कालेन फलं पच्यते।
कर्मकर्तृवाच्यम्— पच्यते फलम् (स्वयमेव)।

कार्य-रूप-निमित्तार्थ-शास्त्र-तादात्म्य-शब्दिताः।
व्यपदेशश्च सप्तैताननतिदेशान् प्रचक्षते॥

# कर्मकर्तृप्रकरणस्य सामान्यज्ञानम्



क्रियमाणं तु यत्कर्म स्वयमेव प्रसिध्यति ।
सुकरैः स्वैर्गुणैर्वृद्धाः कर्मकर्तेति तद्विदुः ॥
कर्मस्थे सति धात्वर्थे कर्मकर्ता तु कर्म्मवत् ।
कर्तृस्थे सति धात्वर्थे कर्मकर्ता तु कर्तृवत् ॥

यथा – अन्नं ( स्वयमेव ) पच्यते, वृक्षः ( स्वयमेव ) भिद्यते, लता ( स्वयमेव ) छिद्यते ।
कर्तृस्थे यथा – ग्रामः ( स्वयमेव) गच्छति ।

निर्वर्त्ये च विकार्ये च कर्मवद्भाव इष्यते ।
न तु प्राप्ये कर्मणीति सिद्धान्तो हि व्यवस्थितः॥

एवं च " घटः क्रियते, सोमः सूयते" इत्यादावनयोरेव कर्म्मणोः कर्मवद्भावो, न तु ग्रामो गच्छतीत्यादौ प्राप्ते कर्मणीति विवेक्त व्यम् ।

# कर्मकर्तृप्रकरणारम्भेण को लाभः ?



* ननु पचेः कर्मणः फलस्य कर्तृत्वविवक्षायाम् 'फलं पचति' इति प्रयोगः स्याद् इति चेन्न कर्तृरूपस्य फलस्य कर्मवद्भावातिदेशेन कर्मणि लकारवत् 'पच्यते फलम्' इत्येव प्रयोगस्येष्टत्वात् तथा च सूत्रं कर्मवदिति— 'कालः फलं पचति' इत्यत्र कर्मस्था क्रिया=फलनिष्ठापाकक्रिया तया क्रियया तुल्यक्रिया=फलस्य कर्तृत्वविवक्षायां फलनिष्ठा पाकक्रिया तस्याः कर्ता=फलरूपस्तस्य फलस्य कर्मवद्भावः इति सूत्रार्थे जाते कर्तुरेव कर्मत्वात्कर्मणि लकारे यगादिकार्ये कृते 'पच्यते फलम्' इति रूपम्। अत्र कर्मवद्भावपक्षे सर्वेषां प्रथमादिपुरुषाणां यथायथं प्रयोगाः 'त्वं पच्यसे, अहं पच्ये' इत्यादयो बोध्याः। भावे लकारे च 'चैत्रेण भूयते' इतिवत् प्रथमपुरुषैकवचनमेव 'फलेन, त्वया, मया च पच्यते' इत्येतत्प्रकरणतात्पर्यम्॥

# लृँट्-विधानम्



❖ लृँट्-विधायकं विधिसूत्रम्—

**सूत्रम्—** अभिज्ञावचने लृँट् (३,१.११२)

**अर्थः—** स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृँट्। लँङोऽपवादः॥

❑ वसँ निवासे॥ स्मरसि कृष्ण ! गोकुले वत्स्यामः।

एवं बुध्यसे, चेतयसे इत्यादिप्रयोगेऽपि॥

❖ लृँट्-निषेधकं सूत्रम्—

**सूत्रम्—** न यदि (३,१.११३)

**अर्थः—** यद्योगे उक्तं न।

अभिजानासि कृष्ण ! यद्वने अभुञ्ज्महि॥

# लँट्-विधानम्



❖ लँट्-विधायकं विधिसूत्रम्—

सूत्रम्— लँट् स्मे (३,२.११८)

अर्थः— लिँटोऽपवादः। स्मशब्दयोगे भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लँट् स्यात्।
यजति स्म युधिष्ठिरः॥

❖ वर्त्तमानातिदेशसूत्रम्—

सूत्रम्— वर्तमानसमीप्ये वर्तमानवद्वा (३,३.१३१)

अर्थः— वर्तमाने ये प्रत्यया उक्तास्ते वर्तमानसामीप्ये भूते भविष्यति च वा स्युः।
कदाऽऽगतोऽसि? अयमागच्छामि; अयमागमं वा।
कदा गमिष्यसि? एष गच्छामि; गमिष्यामि वा॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लिँङ्-विधानम्



❖ लिँङ्लकारविधायकं विधिसूत्रम्—

**सूत्रम्— हेतुहेतुमतोर्लिँङ् (३,३.१५६)**

**अर्थः—** वा स्यात्। कृष्णं नमेच्चेत्सुखं यायात्। कृष्णं नंस्यति चेत्सुखं यास्यति। भविष्यत्येवेष्यते। नेह— हन्तीति पलायते॥

- **'विधिनिमन्त्रणे'ति** लिँङ्। विधिः= प्रेरणम्= भृत्यादेर्निकृष्टस्य प्रवर्तनम्— यजेत॥
- निमन्त्रणम्= नियोगकरणम्, आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम्। इह भुञ्जीत॥
- आमन्त्रणम्= कामचारानुज्ञा। इहासीत॥
- अधीष्टम्= सत्कारपूर्वको व्यापारः। पुत्रमध्यापयेद् भवान्॥
- संप्रश्नः= संप्रधारणम्। किं भो वेदमधीयीय उत तर्कम्॥
- प्रार्थनम्= याच्ञा। भो ! भोजनं लभेय।
- एवं लोँट्॥

**॥ इति लकारार्थप्रक्रिया॥**

**॥ इति तिङन्तं समाप्तम्॥**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते लकारार्थप्रक्रिया)

# लकारार्थसङ्ग्रहः

## लँट्प्रयोगः

❖ लँट् नित्यं वर्तमाने स्यादतीतेऽपि 'स्म' योगतः ।
'यावत् पुरा' प्रयोगे च भविष्यति तथा भवेत् ॥

(वर्तमाने लँट्) वर्तमाने – ते सुखेन वर्तन्ते ।
(लँट् स्मे) अतीते – ते सुखेन वर्तन्ते स्म ।
(यावत्पुरानिपातयोर्लँट्) भविष्यति— स यावद् आगच्छति तावदहं गमिष्यामि ।

❖ 'कदा कर्हि' प्रयोगे तु भविष्यति विभाषया ।
वर्तमानसमीपे च ज्ञेयमन्यत् प्रयोगतः॥

(विभाषा कदा-कर्ह्योः) कदा ददामि दास्यामि वा ।
(वर्तमानसमीप्ये वर्तमानवद्वा)
कदाऽऽगतोऽसि? अयमागच्छामि; अयमागमं वा।
कदा गमिष्यसि? एष गच्छामि; गमिष्यामि वा॥

## लिँङ्प्रयोगः

❖ विध्यर्थे विधिलिँङ् प्रोक्तो हेतुहेतुमतोस्तथा ।
'यदा यदि' प्रयोगे तु भविष्यति तथा भवेत् ॥

(विधिनिमन्त्रण..) विध्याद्यर्थे – सत्यं ब्रूयात् ।
(हेतुहेतुमतोर्लिँङ्) हेतुहेतुमतोः —प्रियं वदेत् चेत् सर्वस्य प्रियो भवेत् ।
(यदायद्योरुपसङ्ख्यानम्) 'यदा यदि' प्रयोगे – वक्ष्यामि यदा स आगच्छेत् । यास्यामि यदि स वदेत् ।

❖ शक्तौ सम्भावने चापि संप्रश्ने प्रार्थने तथा
इच्छार्थोपपदे चैव ज्ञेयमन्यत् प्रयोगतः॥

(शकि लिँङ् च) शक्तौ— त्वं भारं वहेः ।
सम्भा०— अपि शिरसा गिरिं भिन्द्यात् ॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः



# लकारार्थसङ्ग्रहः

## लोँट्प्रयोगः

❖ अनुज्ञायां नियोगे च प्रार्थनायां निमन्त्रणे ।
इच्छार्थोपपदे प्रश्ने समर्थनाशिषोश्च लोँट् ॥

अनुज्ञायाम्— त्वं गच्छ। नियोगे – करोतु भवान् ।
प्रार्थनायाम् – विद्यां लभै। निमन्त्रणे – इह भुङ्क्तां भवान्।
इच्छार्थोपपदे – इच्छामि भवान् माम् अध्यापयतु ।
प्रश्ने— किं वेदमध्ययै, उत व्याकरणम् ।
समर्थनायाम् – सिन्धुमपि शोषयाणि।
आशिषि— त्वं चिरं जीव ॥

# भावकर्म-कर्तृकर्म-लकारार्थप्रक्रियाणां परीक्षणम्

१. भाव-कर्मणोः प्रत्यये सति किं पदं भवति ?

**क. आत्मनेपदम्**

ख. परस्मैपदम्

ग. उभयपदम्

घ. स्वगामिनि क्रियाफलेऽपि परस्मैपदम्

२. भावकर्मवाचिनि सार्वधातुके कः विकरणप्रत्ययो भवति?

क. लँट्

ख. यक्

ग. शप्

घ. णिच्

३. भावः कः ?

क. मूल्यम्

ख. कर्म

**ग. क्रिया**

घ. प्रभावः

४. भाववाच्ये प्रथमपुरुष एव भवति— अस्य प्रमुखं कारणं किम्?

क. धातोरकर्मकत्वात्।

ख. युष्मदस्मद्भ्यां सामानाधिकरण्यात्।

**ग. युष्मदस्मद्भ्यां सामानाधिकरण्याभावात्।**

घ. तिङ्वाच्यक्रियाया अद्रव्यरूपत्वात्।

५. चिण्वद्भावः केन सूत्रेण भवति?

क. चिण् भावकर्मणोः

ख. स्यसिँच्सीयुँट्तासिषु भावकर्मणोरुपदेशेऽज्झन-ग्रहदृशां वा चिण्वदिट् च

ग. चिण् ते पदः

घ. भावकर्मणोः

६. भावे इदम् अशुद्धं वर्त्तते—

क. अभावि

ख. भूयते

ग. भविता

**घ. भूयन्ते**

७. 'अभावि' इत्यत्र 'त'इत्यस्य लुक् केन सूत्रेण भवति ?

क. चिण् ते पदः

ख. भावकर्मणोः

**ग. चिणो लुक्**

घ. चिण् भावकर्मणोः

८. 'अनुभूयते' इति विषये अधोलिखेतेषु कथनेषु असङ्गतं कथनं चिनुत—

क. उपसर्गवशादयं धातुः सकर्मकः सञ्जातः।

ख. अस्य प्रयोगः वचनत्रयेषु भवितुं शक्यते।

ग. अस्य प्रयोगः पुरुषत्रयेषु भवति।

**घ. अस्मात् परस्मैपदमपि भवितुं शक्यते।**

९. देवदत्तो भवति। इत्यस्य वाच्यपरिवर्तनं कुरुत—

क. देवदत्तो भूयते।

ख. देवदत्तेन भूयते।

ग. देवदत्तेन भवति।

घ. देवदत्तेन भूयन्ते।

१०. 'भाव्यते' इत्यत्र णिलोपः केन—

क. भावकर्मणोः

ख. णेरनिटि

ग. चिणो लुक्

घ. चिण् भावकर्मणोः

११. ण्यन्तेभ्यो धातुभ्यः कुत्र लकारो न भवति—

**क. भावे**

ख. कर्मणि

ग. कर्तरि

घ. वर्तमाने

'ऋ-गतौ' धातोः कर्मणि किं रूपम्—

क. ऋयते

**ख. अर्यते**

ग. अरे

घ. ऋज्यते

१२. एतेषु 'अनिदितां हल उपधायाः क्ङिति' इति सूत्रं कुत्र प्रवर्तते—

क. नन्द्यते

**ख. स्रस्यते**

ग. इज्यते

घ. स्मर्यते

१३. 'तायते, तन्यते' इत्यत्र यकि परतः किं कार्यं विधीयते—

क. नुम्

ख. दीर्घः

ग. उपधादीर्घः

**घ. आत्वम्**

१४. 'दीयते' इत्यत्र ईत्वं केन ?

क. दो दद्घोः

ख. आतो युक् चिण्कृतोः

ग. स्य सिच्सीयुट्..........

**घ. घुमास्था................**

१५. एतेषु कुत्र नलोपोऽस्ति—

**क. अभाजि, अभञ्जि**

ख. अलम्भि, अलाभि

ग. अन्वतप्त

घ. नन्द्यते

१६. ‘शिशुः पुस्तकं पठति’ इत्यस्य वाच्यपरिवर्तनं कुरुत—

क. शिशुना पुस्तकं पाठ्यते।

ख. शिशुं पुस्तकं पठ्यते।

ग. शिशुना पुस्तकः पठ्यते।

**घ. शिशुना पुस्तकं पठ्यते।**

१७. ‘मया सिंहो दृष्टः’ इत्यस्य वाच्यपरिवर्तनं कुरुत—

क. अहं सिंहं पश्यामि।

**ख.अहं सिंहम् अपश्यम्।**

ग. मया सिंहः अपश्यत्।

घ. अहं सिंहम् अदृश्यम्।

१८. यदा कर्मैव कर्तृत्वेन विवक्षितं तदा सकर्मकधातुभ्यो कस्मिन् लकारो न भवति ?

**क.कर्मणि**

ख. भावे

ग. कर्तरि

घ. वर्तमाने

१९. ‘कर्मवत्कर्मणा तुल्यक्रियः’ इति सूत्रे कीदृशोऽतिदेशः—

क. रूपातिदेशः

**ख.कार्यातिदेशः**

ग. निमित्तातिदेशः

घ. शास्त्रातिदेशः

२०. अतिदेशाः कति भवन्ति—

क. चत्वारः

ख. पञ्च

ग. षड्

**घ. सप्त**

२१. पच्यते फलम् (स्वयमेव)। इत्यत्र फलमिति पदं वर्तते—

**क.कर्ता**

ख. कर्म

ग. भावः

घ. करणम्

२२. स्मृतिबोधिन्युपपदे धातोः कः लकारः भवति—

क. लँङ्

ख. लुँट्

**ग. लृँट्**

घ. लँट्

२३. ‘स्म’ इति शब्दोपपदे को लकारो भवति?

क. लँङ्

ख. लुँट्

ग. लृँट्

**घ. लँट्**

२४. भूते भविष्येऽपि कस्य लकारस्य प्रयोगः कर्तुं शक्यते—

क. लँङ्

ख. लुँट्

ग. लृँट्

**घ. लँट्**

२५. 'हेतुमत्' शब्दार्थः कः—

क. कारणम्

**ख.कार्यम्**

ग. उभयम्

घ. अनुभयम्

२६. 'हेतुहेतुमतोर्लिँङि'ति सूत्रेण कस्मिन् काले लिँङ् विधीयते—

**क. लिँङ्**

ख. लुँट्

ग. लृँट्

घ. लँट्